# निर्गुणमानसपूजा

https://sa.wikisource.org/s/1s81

शिष्य उवाच ॥

अखण्डे सच्चिदानन्दे निर्विकल्पैकरूपिणि ।

स्थितेऽद्वितीयभावेऽपि कथं पूजा विधीयते ॥ १॥

पूर्णस्यावाहनं कुत्र सर्वाधारस्य चासनम् ।

स्वच्छस्य पाद्यमर्घ्यं च शुद्धस्याचमनं कुतः ॥ २॥

निर्मलस्य कुतः स्नानं वासो विश्वोदरस्य च ।

अगोत्रस्य त्ववर्णस्य कुतस्तस्योपवीतकम् ॥ ३॥

निर्लेपस्य कुतो गन्धः पुष्पं निर्वासनस्य च ।

निर्विशेषस्य का भूषा कोऽलङ्कारो निराकृतेः ॥ ४॥

निरञ्जनस्य किं धूपैर्दीपैर्वा सर्वसाक्षिणः ।

निजानन्दैकतृप्तस्य नैवेद्यं किं भवेदिह ॥ ५॥

विश्वानन्दयितुस्तस्य किं ताम्बूलं प्रकल्पते ।

स्वयंप्रकाशचिद्रूपो योऽसावर्कादिभासकः ॥ ६॥

गीयते श्रुतिभिस्तस्य नीराजनविधिः कुतः ।

प्रदक्षिणमनन्तस्य प्रणामोऽद्वयवस्तुनः ॥ ७॥

वेदवाचामवेद्यस्य किं वा स्तोत्रं विधीयते ।

अन्तर्बहिः संस्थितस्य उद्वासनविधिः कुतः ॥ ८॥

गुरुरुवाच ॥

आराधयामि मणिसंनिभमात्मलिङ्गम्

मायापुरीहृदयपङ्कजसंनिविष्टम् ।

श्रद्धानदीविमलचित्तजलाभिषेकैः

नित्यं समाधिकुसुमैर्नपुनर्भवाय ॥ ९॥

अयमेकोऽवशिष्टोऽस्मीत्येवमावाहयेच्छिवम् ।

आसनं कल्पयेत्पश्चात्स्वप्रतिष्ठात्मचिन्तनम् ॥ १०॥

पुण्यपापरजःसङ्गो मम नास्तीति वेदनम् ।

पाद्यं समर्पयेद्विद्वन्सर्वकल्मषनाशनम् ॥ ११॥

अनादिकल्पविधृतमूलाज्ञानजलाञ्जलिम् ।

विसृजेदात्मलिङ्गस्य तदेवार्घ्यसमर्पणम् ॥ १२॥

ब्रह्मानन्दाब्धिकल्लोलकणकोट्यंशलेशकम् ।

पिबन्तीन्द्रादय इति ध्यानमाचमनं मतम् ॥ १३॥

ब्रह्मानन्दजलेनैव लोकाः सर्वे परिप्लुताः ।

अच्छेद्योऽयमिति ध्यानमभिषेचनमात्मनः ॥ १४॥

निरावरणचैतन्यं प्रकाशोऽस्मीति चिन्तनम् ।

आत्मलिङ्गस्य सद्वस्त्रमित्येवं चिन्तयेन्मुनिः ॥ १५॥

त्रिगुणात्माशेषलोकमालिकासूत्रमस्म्यहम् ।

इति निश्चयमेवात्र ह्युपवीतं परं मतम् ॥ १६॥

अनेकवासनामिश्रप्रपञ्चोऽयं धृतो मया ।

नान्येनेत्यनुसन्धानमात्मनश्चन्दनं भवेत् ॥ १७॥

रजःसत्त्वतमोवृत्तित्यागरूपैस्तिलाक्षतैः ।

आत्मलिङ्गं यजेन्नित्यं जीवन्मुक्तिप्रसिद्धये ॥ १८॥

ईश्वरो गुरुरात्मेति भेदत्रयविवर्जितैः ।

बिल्वपत्रैरद्वितीयैरात्मलिङ्गं यजेच्छिवम् ॥ १९॥

समस्तवासनात्यागं धूपं तस्य विचिन्तयेत् ।

ज्योतिर्मयात्मविज्ञानं दीपं सन्दर्शयेद्बुधः ॥ २०॥

नैवेद्यमात्मलिङ्गस्य ब्रह्माण्डाख्यं महोदनम् ।

पिबानन्दरसं स्वादु मृत्युरस्योपसेचनम् ॥ २१॥

अज्ञानोच्छिष्टकरस्य क्षालनं ज्ञानवारिणा ।

विशुद्धस्यात्मलिङ्गस्य हस्तप्रक्षालनं स्मरेत् ॥ २२॥

रागादिगुणशून्यस्य शिवस्य परमात्मनः ।

सरागविषयाभ्यासत्यागस्ताम्बूलचर्वणम् ॥ २३॥

अज्ञानध्वान्तविध्वंसप्रचण्डमतिभास्करम् ।

आत्मनो ब्रह्मताज्ञानं नीराजनमिहात्मनः ॥ २४॥

विविधब्रह्मसंदृष्टिर्मालिकाभिरलङ्कृतम् ।

पूर्णानन्दात्मतादृष्टिं पुष्पाञ्जलिमनुस्मरेत् ॥ २५॥

परिभ्रमन्ति ब्रह्माण्डसहस्राणि मयीश्वरे ।

कूटस्थाचलरूपोऽहमिति ध्यानं प्रदक्षिणम् ॥ २६॥

विश्ववन्द्योऽहमेवास्मि नास्ति वन्द्यो मदन्यतः ।

इत्यालोचनमेवात्र स्वात्मलिङ्गस्य वन्दनम् ॥ २७॥

आत्मनः सत्क्रिया प्रोक्ता कर्तव्याभावभावना ।

नामरूपव्यतीतात्मचिन्तनं नामकीर्तनम् ॥ २८॥

श्रवणं तस्य देवस्य श्रोतव्याभावचिन्तनम् ।

मननं त्वात्मलिङ्गस्य मन्तव्याभावचिन्तनम् ॥ २९॥

ध्यातव्याभावविज्ञानं निदिध्यासनमात्मनः ।

समस्तभ्रान्तिविक्षेपराहित्येनात्मनिष्ठता ॥ ३०॥

समाधिरात्मनो नाम नान्यच्चित्तस्य विभ्रमः ।

तत्रैव ब्रह्मणि सदा चित्तविश्रान्तिरिष्यते ॥ ३१॥

एवं वेदान्तकल्पोक्तस्वात्मलिङ्गप्रपूजनम् ।

कुर्वन्ना मरणं वापि क्षणं वा सुसमाहितः ॥ ३२॥

सर्वदुर्वासनाजालं पदपांसुमिव त्यजेत् ।

विधूयाज्ञानदुःखौघं मोक्षानन्दं समश्नुते ॥ ३३॥

॥ इति श्रीमत्परमहंसपरिव्राजकाचार्यस्य श्रीगोविंदभगवत्पूज्यपाद

शिष्यस्य श्रीमच्छङ्करभगवतः विरचिता निर्गुणमानसपूजा समाप्ता ॥